श्रीमत्कृष्णयज्वप्रणीता

# मीमांसापरिभाषा

मूल्यं ९ आणकाः

श्रीमत्कृष्णयज्वप्रणीता

# मीमांसापरिभाषा

पाठान्तर-टिप्पण्यादिभिः समुल्लसिता



श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य 'काव्यतीर्थ'

इत्यनेन संशोधिता

पञ्चमं संस्करणम् : सन १९५०




निर्णयसागर प्रेस, मुंबई

मूल्यं ९ आणकाः



# निवेदनम्

इह संसारे संपादनीयेषु चतुर्विधपुरुषार्थेष्वभ्यर्हितत्वेन प्राथमिको **धर्म** एवेतरपुरुषार्थमूलकारणतया विचारणीयत्वेनाद्रियते सम्यगास्तिकधुरीणैस्तत्र तत्र। स च धर्मो वेदप्रतिपाद्य इति **वेद** एव सर्वस्वमखिलानां धार्मिकाग्रेसराणाम्। वेदस्य च स्वतःप्रमाणभूतस्य पूर्वोत्तरभेदेन स्तो द्वौ भागौ। तत्रोत्तरभागमधिकृत्य प्रवृत्ता **उत्तरमीमांसा** ब्रह्ममीमांसापरनाम्नी। यां भगवान् **श्रीमद्वेदव्यासः** सूत्ररूपामररचत् भगवत्पादाचार्यप्रभृतयश्च भाष्यादिभिरपूपुषन्। पूर्वभागमधिकृत्य प्रवृत्ता **पूर्वमीमांसा** यज्ञमीमांसापरनामधेया। यां किलार्वाग्दृष्टिभिर्भ्रमप्रमादादिदोषदूषितस्वान्ततया दुःशकं वेदस्य याथार्थ्येन तत्त्वमवगन्तुमिति तदर्थविचारणाय भगवान् **जैमिनिमहर्षि**र्द्वादशाध्यायैः प्रणिनाय। सेयमवश्यमुपादेयत्वादखिलशास्त्रमूलत्वाद्ब्रह्ममीमांसातः प्रथममध्येयत्वाच्च केवलमीमांसाशब्देनापि व्यवह्रियते। यस्याः परिचयमन्तरा विद्वद्भिरपि न सुलभः शास्त्रार्थनिर्णयः किमुत केवलव्युत्पत्तिमद्भिः। यां विना संशेरतेऽनुक्षणं याज्ञिका वितायमानेषु वितानजातेष्वित्यवश्यं परिशीलनीया मीमांसा।

निश्चीयते खलु पूर्वतैर्विद्वद्वरैरियं कृताधिकतरादरेति तदीयैर्मीमांसोपोद्बलितै-र्हेमाद्रि-पूर्तकमलाकर—निर्णयसिन्धु-कौस्तुभादिभिर्वसुन्धरामण्डलमण्डनायमानसंख्यावन्मान्यैर्धर्मशास्त्रनिबन्धरत्नैः। परं सेयं संप्रति भारतवर्षस्य भाग्यविपर्ययाद्दैवव्याकोपाच्च प्रचलितसंप्रदायेषु विशेषतोऽर्हणाभावादत्र देशे लुप्तप्राया वा नामशेषेव समजनीति हन्त परिदूयतेऽधिकतरं नश्चेतः यदनुसवनमनुक्षणं प्रतिशास्त्रं प्रतिधर्मशास्त्रनिबन्धं प्रतियाज्ञिकप्रयोगं च जीवातुभूतं सर्वोपकारकमनर्घ्यं सतत-

कण्ठधार्यं श्रेष्ठरत्नं प्रमादेनावकरोज्झितमिवाभूदित्यास्तां प्रशस्तहानि-विषादजल्पनेन ।

मीमांसाविषयो यद्यपि दुरूहस्तथापि श्रेयोर्थिभिस्तादृशगहनं प्रविविक्षुभिर्व्युत्पित्सुभिरौदासीन्यमुज्झित्वा स्वमतिपरिणामावधि प्रयतितव्यं गुरुकुल उषित्वेति तत्र सर्वान्प्रवणीकर्तुकामैरस्माभिर्यावच्छक्यं मीमांसाशास्त्रस्य पदपदार्थ-संकेतानां ज्ञानाय जिज्ञास्यविषयप्रदर्शकशिरोलेख्यैः सुविभक्तविषया **श्रीमत्कृष्णयज्वप्रणीता मीमांसापरिभाषा** मुद्रणायोपस्कृतास्ति । यस्या अन्तरान्तरा प्रतिपुटाधः पाठान्तराणि संयोज्य विषमस्थलेषु च विशदीकरणार्था टिप्पण्यपि संयोजितास्ति । यद्यत्राध्यापका अध्येतारश्चादरं विरचयेयुः स्वल्पेनैव कालेनान्यानपि मीमांसाप्रकरण ग्रन्थान्प्रकाशयितुं सोत्साहाः सन्तो दृढबद्धपरिकरा भवेम-इति ।



# मीमांसापरिभाषाया विषयानुक्रमः



**मीमांसापरिभाषाया विषयानुक्रमः संपूर्णः ॥**



श्रीः

श्रीमत्कृष्णयज्वप्रणीता

# मीमांसापरिभाषा

●

## मङ्गलम्

### श्रीमते वेदपुरुषाय नमः

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम् ।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे ॥ १ ॥
बालानां शास्त्रसिद्धार्थलेशबोधाय धीमता ।
मीमांसापरिभाषेयं क्रियते कृष्णयज्वना ॥ २ ॥

## मीमांसाविषयः

इह खलु महर्षिणा जैमिनिना द्वादशलक्षण्यां[1] पूर्वमीमांसायां धर्माधर्मावेवानुष्ठानोपयोगितया विचारितौ । तत्र वेदबोधितेष्टसाधनताको धर्मः; यथा यागादिः । वेदबोधितानिष्टसाधनताकोऽधर्मः; यथा कलञ्ज[2]भक्षणादिः । तयोश्च वेदः, स्मृतिः, आचारश्च प्रमाणम् । तत्र वेदः स्वतन्त्रं प्रमाणम्; इतरौ तु वेदमूलकतया ।

## वेदद्वैविध्यम्

**तत्र वेदो द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति** । तत्र प्रयोगकालीनार्थस्मरणहेतुतया **मन्त्राणा[3]मुपयोग** इति वक्ष्यते । प्रयोगोऽनुष्ठानं तत्कालीनेत्यर्थः । विधायकं वाक्यं **ब्राह्मणम्** । तच्छेषो[1]ऽर्थवादः । तस्य विधेयप्राशस्त्यप्रतीतिजननद्वारा विधिवाक्यैकवाक्यतया प्रामाण्यमिति वक्ष्यते ।

---

**टिप्प०-१** श्रीमद्भगवता जैमिनिना द्वादशाध्यायी कर्ममीमांसा 'अथातो धर्मजिज्ञासा' इत्यादिः 'अन्वाहार्ये च दर्शनात्' इत्यन्ता प्रणीता—तत्र धर्मप्रमाणं, धर्मभेदः, शेषशेषिभावः, क्रत्वर्थपुरुषार्थभेदेन प्रयुक्तिविशेषः, श्रुत्यर्थपाठादिक्रमभेदः, अधिकारविशेषः, सामान्यातिदेशः, विशेषातिदेशः, ऊहः, बाधः, तन्त्रम्, प्रसङ्गश्च इति क्रमेण द्वादश लक्षणानि सन्तीति पूर्वमीमांसा द्वादशलक्षणीत्युच्यते. २ विषलिप्तबाणहतमृगमांसं कलञ्जमित्यभिधीयते. प्रामाणिकास्तु 'रक्तलशुनं' इति मन्वते. ३ प्रयोगसमवेतार्थस्मारका मन्त्राः.

---

**पाठा०-1** ब्राह्मणशेषश्चार्थवादः.

## ब्राह्मणवाक्यभेदाः

ब्राह्मणवाक्यं चानेकविधम्—कर्मोत्पत्तिवाक्यं, गुणवाक्यं, फलवाक्यं, फलाय गुणवाक्यं, सगुणकर्मोत्पत्तिवाक्यमित्यादिभेदात् ।

## कर्मोत्पत्तिवाक्यम्

तत्र येन वाक्येन 'इदं कर्म कर्तव्यम्' इति बोध्यते तत् **कर्मोत्पत्तिवाक्यम्**; यथा 'अग्निहोत्रं जुहोति' इति । अत्राग्निहोत्रहोमः कर्तव्यतया विधीयत इति कर्मोत्पत्तिवाक्यमिदम् ।

## गुणवाक्यम्

विहिते कर्मणि तदङ्गतया द्रव्यदेवतादिविधायकं वाक्यं **गुणवाक्यम्**; यथा 'दध्ना जुहुयात्' इति । अत्र होममुद्दिश्याऽङ्गतया दधि विधीयत इति गुणवाक्यमिदम् । कर्माङ्गतया विहितत्वमेव दध्यादे**र्गुणत्वम्** । अत्र होम**स्योद्देश्यत्वं** नाम मानान्तरप्राप्तत्वे सति विधेयान्वयितया निर्देश्यत्वम् । तस्यैव मानान्तरप्राप्तस्य पुनः कथ्यमानरूपत्व**मनुवाद्यत्वम्**, दध्यादिगुणान्वयितया **प्राधान्यं** च । दध्यादेर्मानान्तराप्राप्तत्वादत्रैव **विधेयत्वम्**, होमसाधनत्वाच्च होमापेक्षया **गुणत्वम्**, पुरुषेणानुष्ठीयमानत्वा**दुपादेयत्वं** चेति । अत्र मानान्तरप्राप्तत्वं मानान्तरज्ञातत्वम्, अप्राप्तत्वं चाज्ञातत्वमिति बोध्यम् ।

## फलवाक्यम्

उत्पन्नस्य कर्मणः फलाकाङ्क्षायां फलसंबन्धबोधको विधिः **फलविधिः**; यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । अत्र 'यः स्वर्गं कामयते स तत्साधनत्वेनाग्निहोत्रनामकं होमं भावयेत्–कुर्यात्' इति अग्निहोत्रवाक्योत्पन्नस्य कर्मणः फलसंबन्धो बोध्यत इति फलवाक्यमिदम् ।

## फलाय गुणवाक्यम्

प्राप्तं कर्माश्रित्य फलाय गुणविधौ फलाय गुणवाक्यम्—यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति । अग्निहोत्रवाक्योत्पन्नं होममाश्रित्येन्द्रियफलाय दधिरूपो गुणो विधीयते—'होमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेत्' इति । होमाश्रितेन होमकारकीभूतेनेत्यर्थः । अयमेव **गुणफलविधिः**, **गुणकामविधि**रिति चोच्यते ।

---

पाठा०-1 विधिरपि.

## सगुणकर्मोत्पत्तिवाक्यम्

द्रव्यदेवतादिगुणविशिष्टकर्मविधायकं वाक्यं **सगुणकर्मोत्पत्तिवाक्यम्**; यथा 'सोमेन यजेत' इति । अत्र सोमलताविशिष्टो यागो विधीयते । विशिष्टविधावपि विशेषणस्यार्थाद्विधिः ।

## सफलकर्मोत्पत्तिवाक्यम्

क्वचित्कर्मोत्पत्तिवाक्यमेव **फलसंबन्धबोधक**मपि भवति; यथा 'उद्भिदा यजेत पशुकामः' इति । अत्रोद्भिन्नामको यागो वाक्यान्तराविहित एव पशुकामस्य पशुफलाय विधीयत इत्येकमेवेदं वाक्यं फलसाधनयोगविधायकम् ।

## प्रयोगविधिः

प्रधानविधिरेवाङ्गविधिभिरेकवाक्यतया महावाक्यतामापन्नः सन् सर्वाङ्गविशिष्टप्रधानप्रयोगविधायकत्वात् **प्रयोगविधिरित्युच्यते**; यथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति । अत्र 'अग्निहोत्रहोमेन स्वर्गं भावयेत्' इत्यर्थः प्रतीयते । भावयेत् उत्पादयेदिति[2] यावत् । अत्र 'कथमनेन होमेन स्वर्गं कुर्यात्' इति कथंभावाकाङ्क्षा जायते; यथा 'कुठारेण द्वैधीभावं कुर्यात्' इत्युक्ते भवत्याकाङ्क्षा 'कथमनेन द्वैधीभावं कुर्यात्' इति । तत्रोद्यमन[१]निपातनादिसहायेनेति गम्यते, तद्वदत्रापि 'अग्निं प्रणयति[२]', 'अग्निषु समिध आदधाति' इत्याद्यङ्गविधिविहितप्रणयनसमिदाधानायतनशोधनादिकाङ्गकलापजनितोपकारसहितेनाऽग्निहोत्रहोमेन स्वर्गं कुर्यादिति प्रकरणकल्पितेन होमवाक्येन स्वर्गाय साङ्गाग्निहोत्रप्रयोगो विधीयत इत्येतादृशः **प्रयोगविधिः** । अङ्ग[३]जातमेवेत्थंभाव इति, **इतिकर्तव्यता**[४] इति चोच्यते । अत्राग्निहोत्रहोमः **प्रधानं**, प्रणयनादिकं **सर्वमङ्गम्** ।

## फलापूर्वकल्पना

**नन्विदमनुपपन्नम्**; आशुतरविनाशिनां कर्मणां कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्तेरिति चेत्,–**मैवम्**; विहितनिषिद्धकर्मणां तत्तद्वा-

---

**टिप्प०**–१ अत्र हस्तेनोद्यम्य निपात्येति तयोरन्वयः. २ गार्हपत्यादाहवनीयाद्यायतनेऽग्निं नयति. ३ अङ्गसमूहः. ४ कर्तव्यस्य इति प्रकार इतिकर्तव्यता.

**पाठा०**–1 यागकर्मविधा. 2 कुर्यादिति.

क्यैस्तत्तत्फलसाधनत्वेऽवगते आशुतरविनाशिनां कर्मणां कालान्तरभाविफलसाधनत्वोपपत्त्यर्थमन्तरा पुण्यपापरूपम**पूर्वं** कल्प्यते । ततश्च यागादेरपूर्वद्वारा स्वर्गसाधनत्वं, न साक्षात् । तदेव **फलापूर्वम्** । तत्[1]करणत्वं च प्राच्योदीच्याङ्गविशिष्टस्य प्रधानस्य भवति, न प्रधानमात्रस्य । प्रधानमात्रादेव फलापूर्वजनने फलस्यापि तत[2] एव सिद्धेरङ्गानामानर्थक्यापत्तेः ।

## उत्पत्त्यपूर्वकल्पना

**ननु** सर्वाङ्गविशिष्टस्य प्रधानस्यापूर्वजनकत्वमयुक्तम्, तच्चाशुतरविनाशिनः प्रधानस्याङ्गसाहित्याभावान्न[3] संभवतीति चेत् ;—**न;** प्रधानकर्मणः स्वरूपेणाङ्गसाहित्याभावेऽपि उत्पत्त्यपूर्वद्वारा साहित्यसंभवात् । प्रधानस्य **सर्वाङ्गसाहित्यसिद्ध्यर्थं** प्रधानकर्म-परमापूर्वयोर्मध्ये प्रधानमात्रजन्य**मुत्पत्ति**नामकं किंचिदपूर्वमस्तीत्यङ्गीकारात् । एवमङ्गानामपि परस्परसहितानामेव प्रधानोपकारकत्वात्तेषां स्वरूपेण साहित्याभावात्त**त्तदुत्पत्त्यपूर्वद्वारा साहित्यं** बोध्यम् । अङ्गानां प्रधानोपकारकत्वं नाम प्रधानस्य फलापूर्वजननसामर्थ्योन्मुखीकरणमेव । **दर्शपूर्णमासयोस्तु विशेषः** 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्याग्नेययागो विहितः, 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इत्यग्नीषोमीययागो विहितः, 'उपांशुयाजमन्तरा यजति' इत्युपांशुयागः 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति वाक्यात्पौर्णमास्यां विहितः । एतानि **पौर्णमास्यां प्रधानानि** । एषामाग्नेयाग्नीषोमीयोपांशुया[1]गानां तत्तद्वाक्यावगतपौर्णमासीकालसंबन्धं निमित्तीकृत्य 'य एवं विद्वान्पौर्णमासीं यजते' इति विद्वद्वाक्ये पौर्णमासीपदेनैकवचनान्तेन समुदायरूपेणानुवादः । तेन वेदे यत्र यत्र पौर्णमासीशब्दस्तत्रतत्राग्नेयादिसमुदायोपस्थितिः ।

## यजिपदाश्रवणेऽपि यागविधानम्

**ननु** 'यदाग्नेयम्' इति वाक्ये यागवाचकपदस्याश्रवणात्कथं यागविधायकत्वमिति चेत्,—**मैवम्;** अग्निर्देवता अस्य पुरोडाशस्येत्यर्थे

**टिप्प०**–१ तत् फलापूर्वम्. २ प्रधानमात्रादेव. ३ वैशिष्ट्यं न संभवतीत्यर्थः.

**पाठा०**–1 याजानां.

विहितदेवतातद्धितान्त 'आग्नेय'शब्दः। तस्य पुरोडाशपदसामानाधिकरण्याद्द्रव्यदेवतासंबन्धोऽवगतः। स यागमन्तरा न संभवति, द्रव्यदेवतासंबन्धस्य यागादन्यत्र क्रियायामसंभवात् यागक्रियायामेव संबन्धो वाच्यः। देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वाङ्गीकारात्[1]। अतः श्रुतद्रव्यदेवतासंबन्धानुमितो यागो यजेतेति कल्पितपदेन विधीयते—अग्निदैवत्यपुरोडाशद्रव्यकामावास्यादिकालकर्तव्ययागेनेष्टं भावयेदिति, एवं यत्र यत्र द्रव्यदेवतासंबन्धमात्रं श्रूयते 'सौर्यं चरुं निर्वपेत्' इत्यादौ, तत्र सूर्यदेवताचरुद्रव्यसंबन्धानुमितो यागो विधीयत इति न कश्चिद्दोषः।

## लिङ्प्रत्ययाद्यभावेऽपि विधायकत्वम्

**ननू**पांशुयागवाक्ये यजेः श्रवणेऽपि विधिप्रत्ययलिङादेरभावात्कथं विधायकत्वमिति चेत्,–**मैवम्**; 'यजति' इत्यस्य 'यजेत'इति **विपरिणामेन** विधायकत्वसंभवात्। एवं[2] 'व्रीहीन् प्रोक्षति', 'समिधो यजति' इत्यादावपि[3] **विपरिणामो** बोध्यः। **केचित्तु**—'यजति'इत्यस्य पञ्चमलकारत्वाङ्गीकाराद्विधायकत्वसंभव इत्याहुः।

तथा 'ऐन्द्रं दध्यमावास्यायां' 'ऐन्द्रं पयोऽमावास्यायाम्' इति वाक्यविहितौ, सांनाय्ययागौ[1] 'यदाग्नेयम्–' इति वाक्यविहिताग्नेयश्चा**मावास्यायां प्रधानानि**।

एतेषां त्रयाणां 'य एवं विद्वानमावास्यां यजते' इति वाक्ये अमावास्यामिति नाम्ना द्वितीयैकवचनान्तेन समुदायरूपेणानुवादः। तेन वेदे यत्र 'दर्श'शब्दः 'अमावास्या'शब्दो वा श्रुतस्तत्र यागसमुदायोपस्थितिः। त्रिकस्य त्रिकस्यामावास्यापौर्णमासीशब्दाभ्यां समुदायरूपेण विद्वद्वाक्ये**ऽनुवादस्य** प्रयोजनं तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ द्विवचनोपपत्तिः; अन्यथा षण्णामाग्नेयादियागानां बहुत्वात् 'दर्शपूर्णमासैः' इति बहुवचनं स्यात्। मानान्तरेण प्राप्तार्थस्य[4] पुनःश्रवण**मनुवादः**।

---

**टिप्प०**–१ सांनाय्यं दधिपयसी। एतौ च सोमयाजिन एव। असोमयाजिनस्तु ऐन्द्राग्नोपांशुयाजौ।

---

**पाठा०**–1 यागत्वरूपत्वा. 2 एवं यत्र लिङादिर्न श्रूयते 'व्रीहीन्'. 3 इत्यादौ तत्र विपरि. 4 प्राप्तस्यार्थस्य.

तथा फलवदाग्नेयादिसंनिधावाम्नातानि प्रयाजाज्यभागानुयाजादीनि षण्णां यागानामङ्गभूतानि ।

## त्रिकापूर्वाद्युत्पत्तिः

एवं स्थिते 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्यायमर्थः—दर्शपूर्णमासाभ्यां समुदायाभ्यां परस्परसहिताभ्यां स्वर्गापूर्वं कुर्यादिति। तत्र कथं कालद्वयवर्तिनोः समुदाययोः परस्परसाहित्यमित्याकाङ्क्षायां स्वरूपेण साहित्याभावेऽपि त्रिकात्रिकादेकैकमपूर्वं जायते, तद्द्वारा द्वयोः समुदाययोः **साहित्यमुच्यते** । एकैकस्य त्रिकस्यापि त्रिकापूर्वजनकत्वं कथमित्याकाङ्क्षायां प्रयाजानुयाजादिपूर्वोत्तराङ्गकलापविशिष्टस्यैकैकस्य त्रिकस्य **समुदायापूर्वजनकत्वमुच्यते** । एकैकत्रिकस्य सर्वाङ्गसाहित्यं स्वरूपेण न संभवतीति त्रिभिर्यागैस्त्रीण्युत्**पत्त्यपूर्वाणि** जायन्ते, तद्द्वारा सर्वाङ्गसाहित्यम् । अङ्गानामपि प्रयाजादीनां स्वरूपेण प्रधानसाहित्याभावात्तत्तदुत्पत्त्यपूर्वद्वारा **साहित्यं** वाच्यम् । तथा च प्रधानजन्योत्पत्त्यपूर्वाणां प्रयाजादिजन्योत्पत्त्यपूर्वैः साहित्यं यदस्ति तदेव प्रधानाना**मङ्गविशिष्टत्वरूपं साङ्गत्वम्** । एवं च पौर्णमास्यामाग्नेयादिजन्यैस्त्रिभिरपूर्वैः प्रयाजादिजन्योत्पत्त्यपूर्वसचिवैः **समुदायापूर्वमेकं** जन्यते, तथा दर्शेऽपि आग्नेयैन्द्रद्वयजन्यस्त्रिभिरपूर्वैरङ्गोत्पत्त्यपूर्वसचिवैरेकं **त्रिकापूर्वं** जन्यते, ताभ्यां त्रिकापूर्वाभ्यां आग्नेयाद्युत्पत्त्यपूर्वत्रितयजन्याभ्यां फलजनकीभूतं महापूर्वं **फलापूर्वनामकं** जन्यते, ततश्च फलमिति। तथा च सर्वाङ्गोपकृताभ्यां दर्शपूर्णमासाभ्यामपूर्वद्वारा स्वर्गं कुर्यादिति फलापूर्वनिष्पत्तये साङ्गप्रधानकर्तव्यताबोधको विधिः **प्रयोगविधिरिति** सिद्धम्।

## विधित्रैविध्यम्

पुनरपि **विधिस्त्रिविधः—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्चेति** ।

## अपूर्वविधिः

तत्र यो विधिरत्यन्ताप्राप्तमर्थं प्रापयति सः **अपूर्वविधिः**—यथा दर्शपूर्णमासप्रकरणे 'व्रीहीन् प्रोक्षति' इति। एतद्विध्यभावे दर्शपूर्णमासीय-

**टिप्प०**–१ विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते.

व्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति । एतद्विधिसत्त्वे तु तत्संबन्धिव्रीहिषु प्रोक्षणं प्राप्नोत्येवेत्यत्यन्ताप्राप्तप्रोक्षणप्रापकत्वादयम**पूर्वविधिः** ।

## नियमविधिः

यश्च पक्षे प्राप्तमर्थं नियमयति स **नियमविधिः**[1]—यथा तत्रैव 'व्रीहीनवहन्ति' इति । एतद्विध्यभावे दर्शपौर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावगतपुरोडाशोपयोगितण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्यायाऽवहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति, तस्मिन्पक्षेऽवहननस्य प्राप्तेरभावात् कार्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात् । सति त्वस्मिन्विधौ अवहननेनैव वैतुष्यं कार्यमिति नियमे सति विदलनं सर्वात्मना निवर्तत इति **नियमविधिरयम्** ।

**नच** वैतुष्यस्य नखविदलनेनापि संभवादवहननियमो व्यर्थः, प्रयोजनाभावादिति वाच्यम् । अवघातेनैव वैतुष्यकरणे किंचिददृष्टं जन्यत इति नियमादृष्टाङ्गीकारात्, नियमेन दृष्टकार्यालाभेऽप्यदृष्टस्योत्पत्तेः । तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलापूर्वे उपयुज्यते; तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्यत इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम् । एवं सोम[2]क्रयादिनियमेऽपि बोध्यम् ।

## परिसंख्याविधिः

द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलको विधिः **परिसंख्याविधिः**—यथा चयनप्रकरणे 'इमामगृभ्णन्[3]रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यश्वरशनाग्रहणाङ्गत्वेन मन्त्रविधिः । एतद्विध्यभावे हि रशनाग्रहणप्रकाशको मन्त्रो रशनाऽऽदानप्रकाशनसामर्थ्यरूपाल्लिङ्गादश्वरशनाऽऽदान इव गर्दभरशनाऽऽदानेऽपि प्राप्नुयात् । सत्यस्मिन्विधौ अनेन मन्त्रेणाश्वरशनामेवाददीत, नतु गर्दभरशनाम्; सा तु तूष्णीमेव ग्राह्येति गर्दभरशनायां मन्त्रनिवृत्तिर्भवतीति द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलकत्वादयं **परिसंख्याविधिः** । एवं 'पञ्च पञ्चनखा भक्ष्याः' इत्यादावपि बोध्यम् ।

---

**टिप्प०**–१ नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः. २ सोमं क्रीणातीत्यादिषु. ३ ऋतस्य सत्यफलसाधनभूतस्य यज्ञस्य अगृभ्णन् गृहीतवन्तः । 'हृग्रहोर्भश्छन्दसि' (वा०४८२३) इति हस्य भः । अत्र अश्वाभिधानीमिति द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्.

## श्रुतिलिङ्गादिषट्प्रमाणानि

पूर्वं दर्शपूर्णमासाङ्गत्वं प्रयाजादीनामुक्तम्। तत्राङ्गत्वबोधकप्रमाणानि—श्रुति[1]-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या-भेदेन षट्।

## श्रुत्युदाहरणम्

तत्र 'दध्ना जुहुयात्'इत्यत्राऽग्निहोत्रवाक्यप्राप्तं होमं जुहुयादित्यनेनोद्दिश्य तत्करणत्वेन तृतीयाश्रुत्या दधि विधीयत इति श्रुत्या दध्नोऽङ्गत्वम्।

## लिङ्गोदाहरणम्

लिङ्गं नाम सामर्थ्यम्[2]। तच्च द्विविधम्—अर्थगतं शब्दगतं चेति। —आद्यं यथा 'स्रुवेणावद्यति'इत्यवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य सामर्थ्यरूपाल्लिङ्गादाज्यसांनाय्यादिद्रवद्रव्यस्यावदानविशेषाङ्गत्वम्; स्रुवेण पुरोडाशाद्यवदानस्य कर्तुमशक्यत्वात्। शब्दगतं तु लिङ्गं अर्थप्रकाशनसामर्थ्यम्। यथा 'अग्नये त्वा जुष्टं निर्वपामि'इति मन्त्रस्य निर्वापप्रकाशनसामर्थ्यरूपाल्लिङ्गान्निर्वापाङ्गत्वम्। यस्य मन्त्रस्य यत्[3]प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम्। यथा 'बर्हिर्[4]देवसदनं दामि'इति मन्त्रस्य बर्हिर्लवनप्रकाशनसामर्थ्यमिति शब्दसामर्थ्यरूपाल्लिङ्गाद्दर्भलवनाङ्गत्वम्[5]॥

## वाक्योदाहरणम्

पदान्तरसम[6]भिव्याहारो वाक्यम्—यथा 'इषे[7] त्वेति छिनत्ति'इति। अत्र छेदनाङ्गत्वेन 'इषे त्वा'इति मन्त्रो वाक्येन विधीयते। यद्वा 'अग्नये त्वा जुष्टम्'इत्यत्रैव अग्नये त्वा जुष्टमित्यादीनां पदानां 'निर्वपामि[8]'इत्यनेनैकवाक्यतापन्नत्वान्निर्वापाङ्गत्वम्।

## प्रकरणोदाहरणम्

प्रकरणं नाम परस्पराकाङ्क्षा—यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इति। अत्र 'दर्शपूर्णमासाभ्यां स्वर्गापूर्वं कुर्यात्'इत्युक्ते भवत्याकाङ्क्षा—कथमाभ्यां स्वर्गापूर्वं कर्तव्यमिति। तथा फलवदाग्नेयादिसं-

---

**टिप्प०**—१ श्रुतिर्नाम निरपेक्षोऽङ्गत्वबोधकः शब्दो विभक्त्यादिरूपः. २ सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते इति. ३ यो मुख्योऽर्थ इत्यर्थः। तेन गौणार्थव्यवच्छेदः. ४ हे देव, बर्हीरूपं तव सदनं दामि लुनामि 'दाप् लवने'. ५ न तूलपलवनाङ्गत्वमिति शेषः. ६ समभिव्याहारो नाम सहोच्चारणम्. तच्च साध्यत्वादिवाचकद्वितीयाद्यभावे शेषवाचकपदस्य शेषिवाचकेन. ७ हे पलाशशाखे, त्वा त्वां इषे अन्नाय छिनद्मीति मन्त्रार्थः. ८ पृथक्कृत्य स्थापयामीत्यर्थः.

निधौ 'समिधो यजति', 'तनूनपातं यजति', 'आज्यभागौ यजति'इत्यादिभिः प्रयाजादयः फलरहिताः श्रुताः, तेषां स्ववाक्येषु फलाश्रवणाद्भवति प्रयोजनाकाङ्क्षा—किमेतेषां प्रयोजनमिति । ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपूर्णमासयोः कथंभावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपौर्णमासाङ्गत्वं निश्चीयते ।

## स्थानोदाहरणम्

**स्थानं** नाम संनिधिः; यथा सांनाय्य[1]पात्रसंनिधौ 'शुन्धध्वम्'[2] इति मन्त्रस्य पाठात् संनिधानात्सांनाय्यपात्रप्रोक्षणाङ्गत्वम् ।

## समाख्योदाहरणम्

**समाख्या** यौगिकी संज्ञा; यथा अध्वर्युकाण्डप्रतिपादिते कर्मजाते आध्वर्यवसमाख्यावशादध्वर्योः कर्तृत्वेनाङ्गत्वम्, तथा 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिषु काम्येष्टिसमाख्यातेष्वैन्द्राग्नादियागेषु काम्येष्टियाज्यानुवाक्याकाण्डसमाख्यावशात् 'उभा वामिन्द्राग्नी' इत्यादीनां याज्यानुवाक्यत्वेन विनियोगः । विनियोगो नामाङ्गत्वेनान्वयः ।

## श्रुत्यादीनां संनिपाते बलाबलम् ।

श्रुत्यादीना[3]मेकत्र समावेशे पूर्वपूर्वस्य प्राबल्यमुत्तरोत्तरस्य दौर्बल्यम् । यथा 'कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यग्निहोत्रप्रकरणे श्रूयते । तत्र मन्त्रस्येन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थानाङ्गत्वे प्राप्ते 'ऐन्द्र्या'इति तृतीयाश्रुत्या 'गार्हपत्यम्'इति द्वितीयाश्रुत्या च गार्हपत्योपस्थानाङ्गत्वेन विधानाल्लैङ्गिक इन्द्रोपस्थाने विनियोनो बाध्यते । श्रुतिर्हि स्वतो विनियोजिका । लिङ्गं त्विन्द्रप्रकाशनसामर्थ्यमालोच्य 'ऐन्द्र्येन्द्रमुपतिष्ठते' इति श्रुतिकल्पनाद्वारा विनियोजकमिति वाच्यम्; तच्चात्र न संभवति । यत्र श्रुतिविनियोगो नास्ति 'अग्नये जुष्टं निर्वपामि'[4] इत्यादौ, तत्र मन्त्रस्य निर्वापप्रकाशनसामर्थ्यमा-

---

**टिप्प०**–१ सांनाय्यं दधिपयसी. २ 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति मन्त्रस्वरूपम्. ३ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानाम्. ४ अत्र 'घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रशेषः.

लोच्य 'अनेन मन्त्रेण निर्वापं कुर्यात्'इति श्रुतिकल्पनाद्वारा लिङ्गं विनियोजकं भवत्येव श्रुतिकल्पनाप्रतिबन्धकाभावात् ।

## लिङ्गादिप्राबल्यविचारः

तथा 'स्योनं ते सदनं कृणोमि' 'तस्मिन्सीद'इत्यत्र तस्मिन्निति तच्छब्दस्य पूर्ववाक्यार्थसापेक्षतया एकवाक्यत्वभानाद्वाक्यप्रमाणेन द्वयोरेकमन्त्रत्वं भाति, लिङ्गेन तु भिन्नमन्त्रत्वं भाति । आद्यस्य सदनप्रकाशनसामर्थ्यात् 'तस्मिन्सीद'इत्यस्य सादनप्रकाशकत्वात् । तत्र वाक्यापेक्षया लिङ्गस्य प्राबल्याद्वाक्यं बाधित्वा लिङ्गेन 'स्योनं ते' इत्यस्य सदनाङ्गत्वं 'तस्मिन्सीद' इत्यस्य सादनाङ्गत्वमिति निर्णयः । 'स्योनं ते' इत्यस्य 'तस्मिन्सीद'इत्यनेनैकवाक्यत्वबलाद्यथाकथंचित्सादनसामर्थ्यरूपं लिङ्गं कल्पयित्वा 'अनेन विशिष्टमन्त्रेण सादनं कुर्यात्'इति श्रुतिः कल्पनीया। सदनप्रकाशनरूपप्रत्यक्षलिङ्गेन कल्पितया 'स्योनं त इत्यनेन सदनं कुर्यात्'इति श्रुत्या 'स्योनं ते' इत्यस्य शीघ्रं सदने विनियोगे सति तेनैव मन्त्रस्य नैराकाङ्क्ष्याद्वाक्यप्रमाणाल्लिङ्गं कल्पयित्वा श्रुतिकल्पना प्रतिबध्यते विलम्बितत्वादिति लिङ्गेन वाक्यस्य बाधः । एवं वाक्येन प्रकरणस्य, प्रकरणात्क्रमस्य, क्रमात्समाख्यायाश्च बाधो वेदितव्यः । तथा श्रुत्या वाक्यादेरपि बाधः । तदेवमङ्गताबोधकप्रमाणानि श्रुत्यादीनि निरूपितानि ।

## अङ्गलक्षणम्

तच्चाङ्गत्वं[1] शेषत्वम् । पारार्थ्यमिति यावत् । परोद्देशेन प्रवृत्तकृतिव्याप्यत्वं **पारार्थ्यम्** । प्रयाजादीनां दर्शपूर्णमासोद्देशेन प्रवृत्तपुरुषकृतिव्याप्यत्वाल्लक्षणसङ्गतिः । दर्शादेः प्रयाजाद्युद्देशेन प्रवृत्तकृतिविषयत्वाभावान्नातिव्याप्तिः । केवलप्रयाजानुद्दिश्य कस्यचिदपि पुरुषस्याप्रवृत्तेः ।

## अङ्गद्वैविध्यम्

**तान्यङ्गानि द्विविधानि—संनिपत्योपकारकाणि, आरादुपकारकाणि** चेति ।

यान्यङ्गानि साक्षात्परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि तानि **संनिपत्योपकारकाणि;** यथा व्रीह्या-

पाठा०–1 अङ्गत्वं पारार्थ्यं.

दिद्रव्याणि तत्संयुक्तावहननप्रोक्षणादीनि, अग्न्यादिदेवतात्तत्संयुक्तयाज्यानुवाक्यावचनादीनि च। अत्र प्रोक्षणादेर्व्रीहिगतातिशयद्वारा, अवहननादेस्तुषविमोकादिरूपदृष्टद्वारा, व्रीह्यादीनां पिष्टद्वारा पुरोडाशनिष्पादकत्वं, तद्वारा यागशरीरतदुत्पत्त्यपूर्वहेतुत्वं च। याज्यानुवाक्यादेर्देवतासंस्कारद्वारा देवतायाश्च साक्षाद्यागशरीरनिर्वर्तकत्वं, तद्वारा तदुत्पत्त्यपूर्वोपयोगित्वं च। यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात् 'द्रव्यदेवते हि यागस्वरूपम्'इति सिद्धान्ताच्च। एतान्येव **सामवायिकानी**त्युच्यन्ते।

आत्मसमवेतापूर्वजनकान्या**रादुपकारकाणि**—यथा प्रयाजाज्यभागानूयाजादीनि। एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति, किंत्वात्मगतमदृष्टं जनयन्तीत्यारादुपकारकाणि।

## कर्मद्वैविध्यम्

तत्र सामान्यतः[1] **कर्म द्विविधम्—अर्थकर्म, गुणकर्म चेति।**

## अर्थकर्मलक्षणम्

तत्र आत्मगतापूर्वजनकं कर्मा**ऽर्थकर्म**—यथाऽग्निहोत्रदर्शपूर्णमासप्रयाजादिकम्।

## गुणकर्मद्वैविध्यम्

**गुणकर्म** संस्कारजनकम्। **तच्च द्विविधम्—उपयुक्तसंस्कारकं, उपयोक्ष्यमाणसंस्कारकं च।**

## उपयुक्तसंस्कारकम्

तत्र उपयुक्तसंस्कारकं **प्रतिपत्तिकर्म**। 'उपयुक्तस्य आकीर्णकरस्य[2] द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्ति'रिति लक्षणात्। यथा इडाभक्षणकृष्णविषाणाप्रासन–चतुरवत्तहोमादिकम्।

**नन्विडा**भक्षणस्य प्रधानयागोपयुक्ताकीर्णकरपुरोडाशद्रव्यप्रक्षेपात्मकत्वात्प्रतिपत्तित्वं युक्तम्, होमस्य तु यागोपयुक्तद्रव्यसंस्कारकत्वाभावा-

---

**टिप्प०**–१ सामान्यतो नाम अङ्गप्रधानरूपम्, नतु केवलमङ्गरूपम्. २ द्रव्यस्याकीर्णकरत्वं नाम तस्य प्रयोजननिर्वर्तनोत्तरं किंचिदकुर्वतोऽन्तरावस्थानेन कार्यकारिणां संचारादावन्तरायकरत्वम्.

त्कथं प्रतिपत्तित्वम्, होमस्य यागसमानकालीनत्वेन होमसंस्कार्यस्य चतुरवत्तादेरुपयुक्तत्वाभावादिति चेत्। अत्राहुः—उपयुक्तसंस्कारमात्रं **प्रतिपत्तिः**, नतु प्रधानयागोपयुक्तत्वम्। तथा सति पशोर्विशसनानन्तरं वपाहृदयाद्युद्धरणकालकर्तव्यलोहितशकृन्निरसनस्य प्रतिपत्तित्वाभावप्रसङ्गात्, यागोपयुक्तद्रव्यप्रक्षेपरूपत्वाभावात्। तथा कृष्णविषाणाप्रासनस्यापि प्रतिपत्तित्वं न स्यात्, यागाङ्गभूतकण्डूयनोपयुक्तत्वेऽपि यागोपयुक्तत्वाभावात्। अतो यत्र क्वचनोपयोगमात्रं विवक्षितम्, यत्र क्वचिदुपयोगस्त्वत्राप्यस्ति, वपाहृदयाद्युद्धरणेनोपयुक्तस्य पशोः संबन्धिनः शकृल्लोहितस्याऽऽकीर्णकरस्य प्रतिपत्त्यपेक्षत्वात्। एवं यथाकथंचिदुपयोगो होमस्थलेऽप्यस्ति।

तथा हि, **प्रतिपत्तिस्त्रिधा—प्रधानोत्तरकाला, प्रधानसमकाला, प्रधानपूर्वकाला चेति**। तत्राद्या इडाभक्षणादिका। **द्वितीया** होमादिका। तथा हि—दर्शपूर्णमासप्रकरणे श्रूयते 'सकृदुपस्तृणाति' द्विर्हविषोऽवद्यति,' 'सकृदभिघारयति', 'चतुरवत्तं जुहोति' इति। तत्र चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तद्रव्यं तत्साधनत्वेन न विधीयते, होमस्याप्राप्तत्वेनानुवादासंभवात्।

**नच** 'यदाग्नेन'वाक्याद्धोमप्राप्तिः; तद्वाक्यस्य यागविधायकत्वात्। **नच** यागहोमयोरभेद इति वाच्यम्; देवतोद्देशेन द्रव्यत्यागस्य **याग**शब्दार्थत्वात्। प्रक्षेपस्य **होम**शब्दार्थत्वात्। तत्राग्नेयचोदनया यागस्य प्राप्तत्वेऽपि प्रक्षेपस्य शक्त्याऽप्राप्तत्वेनानुवादासंभवात्, किंतूपस्तरण-द्विरवदाना-ऽभिघारणवाक्यैः प्राप्तं चतुरवत्तमुद्दिश्य तत्संस्कारत्वेन प्रक्षेपो जुहोतीत्यनेन विधीयते। स च संस्कारः प्रतिपत्तिरूप एव। अग्नये जुष्टमभिघारयामि'इत्यादिनिर्देशैर्यागाङ्गभूताग्न्यादिदेवतार्थतया यथाकथंचिदुपयुक्तस्य पुरोडाशस्य प्रतिपत्त्यपेक्षया तदवयवद्व्यवदानकर्मकप्रक्षेपस्य प्रतिपत्तिकर्मत्वौचित्यात्।

**स च संस्कारः प्रधानसमकालः। होमो** हि 'वषट्कृते जुहोति'इति विधानाद्वषट्कारोत्तरक्षणे अध्वर्युणा कर्तव्यः। **यागोऽपि** तस्मिन्नेव क्षणे

यागस्मरणार्थेन वषट्कारेण स्मारितः सन् यजमानेनानुष्ठेय इति तयोर्यौगपद्यसंभवात् । तदिदं सर्वप्रदानाधिकरणवार्तिके स्थितम् ।

**प्रधानपूर्वकाला प्रतिपत्तिर्यथा**—'शकृत्संप्रविध्यति' 'लोहितं निरस्यति' इति शकृत्संप्रवेधनलोहितनिरसने । इदमपि 'पशावनालम्भाल्लोहितशकृतोरकर्मत्वम्'[1] इत्यधिकरणे स्थितम् ।

## उपयोक्ष्यमाणसंस्कारभेदाः

उपयोक्ष्यमाणसंस्कारोऽप्यनेकविधः—साक्षाद्विनियुक्तसंस्कारः । साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारः, विनियोक्ष्यमाणसंस्कारश्चेति । तत्र **आद्यो** यथा—'व्रीहीनवहन्ति' इत्यादिः । 'व्रीहिभिर्यजेत' इति वाक्यविनियुक्तव्रीहीणामवहननसंस्कारः ॥ **द्वितीयो** यथा—'वत्समालभेत'[2] इति । दोहाङ्गत्वेन साक्षाद्विनियुक्तस्य गोद्रव्यस्योपकारको यो वत्सः तत्संस्कारकमिदमालम्भनम् ॥ **तृतीयो** यथा—'तप्ते पयसि दध्यानयति' इति । अत्र 'सा वैश्वदेव्यामिक्षा' इति वाक्येन तच्छब्देन निर्दिश्य वैश्वदेवयागाङ्गत्वेन विनियोक्ष्यमाणं यत्पयस्तत्संस्कारकत्वाद्विनियोक्ष्यमाणसंस्कारकं दध्यानयनम् । पशुपुरोडाशयागस्तूपयुक्तोपयोक्ष्यमाणदेवतासंस्कारार्थः, त्यागांशे अदृष्टार्थश्च । अत्र तत्संस्कार्याग्नीषोमदेवताया वपायागे उपयुक्तार्थत्वात् हृदयाद्यङ्गयागेषु उपयोक्ष्यमाणत्वाच्च । स्विष्टकृद्यागो द्रव्यांशे देवतांशे चोपयुक्तसंस्कारार्थः, त्यागांशे अदृष्टार्थश्च । सूक्तवाकसाधनं प्रहरणमपि तथैव । उत्तमप्रयाजो यक्ष्यमाणदेवतासंस्कारत्वात्तदंशे उपयोक्ष्यमाणसंस्कारः, इतरांशे अदृष्टार्थः । हृदयादिहविर्यागात्पूर्वं क्रियमाणो वसाहोमोऽपि वसांशे प्रतिपत्तिः, इतरांशे अदृष्टार्थ इत्याद्यूह्यम् ।

## प्रतिपत्तेर्लक्षणान्तरम्

**केचित्तु**—उपयोक्ष्यमाणसंस्कारभिन्नसंस्कारकर्मत्वं **प्रतिपत्तिकर्म**त्वम् । चतुरवत्तद्रव्यस्य होमेन भस्मीभूतस्य होमानन्तरमुपयोक्ष्यमाणत्वाभावात् तद्भिन्नत्वं होमेऽस्तीति लक्षणसंगतिरित्याहुः ।

---

**टिप्प०**—१ पूर्वमीमांसातृतीयाध्यायचतुर्थपादस्य चतुर्दशेऽधिकरणस्य सप्तत्रिंशसूत्रस्य. २ पूर्वमीमांसाचतुर्थाध्यायप्रथमपादे द्वादशाधिकरणे सप्तविंशे सूत्रे. ३ आलभेतेत्यत्र आलम्भनं स्पर्श इत्यर्थः.

## अर्थगुणकर्मणोः प्राधान्यम्

**अत्रायं विशेषः**—अर्थकर्मणि द्रव्यापेक्षया कर्मणः प्राधान्यम् । कर्मणि द्रव्यस्य गुणत्वम् । यथाऽग्निहोत्रादौ दध्यादेर्गुणत्वम् । गुणकर्मणि द्रव्यस्य प्राधान्यं, द्रव्ये च कर्मणो गुणत्वम् । 'व्रीहीन् प्रोक्षति, अवहन्ति' इत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यं प्रोक्षणादिक्रियायास्तदपेक्षया गुणत्वमिति ।

## गुणकर्मणश्चातुर्विध्यम्

**पुनरपि गुणकर्म चतुर्विधम्—उत्पत्ति-आप्ति-विकृति-संस्कृतिभेदात् ।**

तत्रोत्पत्तिसंस्कारो **यथा**—'अग्नीनादधीत' इति । मन्त्रविशेषैः संभारेषु निधापिता अप्याहवनीयादय उत्पद्यन्त इत्याहवनीयाद्युत्पत्तिहेतुभूतसंस्कारत्वादाधानस्य उत्पत्तिसंस्कारत्वम् ॥

**आप्तिसंस्कारो यथा**—'स्वाध्यायोऽध्येतव्यः' इति । अध्ययनेन स्वाध्याय आप्यत इत्याप्तिसंस्कारोऽयम् ॥

**विकृतिर्यथा**—'व्रीहीनवहन्ति' इति व्रीहिगतवैतुष्यरूपविकृतिजनकत्वादवहननं विकृतिसंस्कारकम् ॥

**संस्कृतिर्यथा**—'व्रीहीन् प्रोक्षति' इति । [ अत्र प्रोक्षणस्य व्रीहिगतातिशयरूपसंस्कृतिजनकत्वात्संस्कृतिरूपगुणकर्मत्वम् । ] अत्राधानमध्ययनं च स्वतन्त्रं गुणकर्म, नतु क्रत्वङ्गम् । प्रोक्षणादिकं सर्वं क्रत्वङ्गं गुणकर्मेति ध्येयम् ।

## अर्थकर्मणस्त्रैविध्यम्

**अर्थकर्म त्रिविधम्—नित्य-नैमित्तिक-काम्यभेदात् ।**

तत्र 'यावज्जीवमग्निहोत्रं जुहोति', 'सायं जुहोति', 'प्रातर्जुहोति' इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्तव्यतयाऽवगतमग्निहोत्रादिकं **नित्यम्** ।

'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्' इति दर्शपूर्णमासातिपत्तिनिमित्तकपथिकदिष्ट्यादिकं **नैमित्तिकम्** ।

नित्यनैमित्तिकयोरकरणे प्रत्यवाय एव । कृते फलं नास्तीति केचित् ।

अन्ये तु—दुरितनिवृत्तिः फलमस्ति; 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इत्यादिवाक्यैः प्रत्यवायनिवृत्तेः फलत्वेन श्रूयमाणत्वात्।

नचैवं तयोरपि काम्यत्वापत्तिः फलवत्त्वादिति वाच्यम्; फलकामनापूर्वकानुष्ठानाभावात्। तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वानुपपत्तेः।

## काम्यकर्मणस्त्रैविध्यम्

काम्यमपि कर्म त्रिविधम्—केवलमैहिकफलकम्, आमुष्मिकफलकम्, ऐहिकामुष्मिक[1]फलकं चेति। तत्राद्यं यथा—कारीर्यादि। तत् तत्समयवर्तिशुष्यत्सस्यसंजीवनहेतुवृष्टिकामिना क्रियते, न कालान्तरभाविवृष्टिकामेन जन्मान्तरीयवृष्टिकामेन वा॥

केवलामुष्मिकफलकं यथा—स्वर्गाद्यर्थं[2] दर्शपूर्णमासादिकम्। स्वर्गस्य इहलोक[3]भोग्यत्वाभावात्॥

ऐहिकामुष्मिक[4]साधारणफलकं यथा—'वायव्यं श्वेतमालभेत भूतिकामः' इति भूत्यादिफलकमित्यन्यत्र विस्तरः।

## वेदस्यालौकिकार्थबोधकत्वम्

ननु दर्शपूर्णमासादिकर्मणां व्रीह्यादिद्रव्याणां च प्रत्यक्षत्वेन लौकिकत्वात्कथं वेदस्यालौकिकार्थबोधकत्वमिति चेत्,—न; कर्मणां प्रत्यक्षत्वेऽपि तेषां स्वर्गादिफलसाधनत्वमप्रत्यक्षमिति 'तत्फलसाधनतया तत् कर्म कर्तव्यम्' इत्येवं फलसाधनतया कर्मकर्तव्यताबोधकस्य वेदस्यालौकिकार्थबोधकत्वात्। एवं व्रीह्यादीनां यागादिक्रियासाधनत्वं न प्रत्यक्षवेद्यमिति तद्बोधकस्यापि वेदवाक्यस्यालौकिकार्थबोधकत्वमिति न दोषः।

## विधेर्विधायकत्वप्रकारः

इदानीं विधिवाक्यस्य विधायकत्वप्रकारः कथ्यते। तत्र 'स्वर्गकामो यजेत' इत्यत्र यजिधातोरुपरितने तप्रत्यये धर्मद्वयमस्ति—आख्यातत्वं, लिङ्त्वं चेति। तत्राख्यातत्वं सर्वलकार[5]साधारणम्, तदवच्छेदेन[1] लिङ्प्रत्ययः[2] पुरुषप्रवृत्तिरूपामर्थभावनां प्रतिपादयति।

---

टिप्प०—१ तेन रूपेणेत्यर्थः. २ तप्रत्यय इत्यर्थः.

पाठा०–1 मुष्मिकसाधारणफलकं. 2 स्वर्गाद्यर्थदर्श°. 3 एतल्लोक. 4 मुष्मिकफलकं. 5 दशलकारतिङर्थक्रिया.

